ॐ तत्सत्।

# श्रीमहिम्नःस्तोत्रं वेदश्च।

[ श्रीरघुवरमिट्ठूलालशास्त्री, वेदान्ततीर्थः, काव्यतीर्थः, साहित्याचार्यः, एम् ए, एम ओ एल्,
प्रयाग-विश्वविद्यालयः ]

शिवरूपान् गुरून् नत्वा चतुर्णां सम्प्रदर्श्यते।
महिम्नःस्तवपद्यानां वेदसंवादिता मया॥

शिवस्य सर्ववेदान्तलक्ष्यतुरीयब्रह्मरूपत्वाच्छ्रीशिवमहिम्नःस्तोत्रस्य सर्वश्रुतिस्मृतिपुराणागमप्रसिद्धैतद्विषयकगहनार्थमुपजीव्य विरचितत्वेन सर्वस्तोत्रमूर्द्धन्यत्वाच्च "महेशान्नापरो देवो महिम्नो नापरा स्तुति"—रिति यदुक्तं तन्नास्ति मनागपि विशयस्पष्टम्।

एकत्रिंशत्पद्यात्मकमेतत्स्तोत्रं बहुप्राचीनव्याख्याकृद्भिर्व्याख्यातमिति "पूर्वाचार्यकृतव्याख्यासङ्ग्रहः क्रियते मया।" इति श्रीमधुसूदनसरस्वतीविरचितव्याख्यानस्य प्रारम्भादेवावगम्यते। तत्र कियानंशस्तावत्पूर्वाचार्यकृतव्याख्याभ्यः सङ्गृहीतः कियती वा श्रीमधुसूदनसरस्वतीपादानां स्वतन्त्रा कृतिरिति ज्ञानस्य साधनवैधुर्ये पुराणमूलार्थानि वेदैकमूलार्थानि वा पद्यानि तैस्तैः प्राचीनाचार्यैः कथं व्याख्यातानीति ज्ञानं तु सुतरां दुर्लभम्।

मधुसूदनीव्याख्यायां महिम्नःस्तोत्रप्रसङ्गागतकथाविशेषाणां मूलान्वेषणे प्रायेण प्रयत्नविशेषो न कृतोऽपि तु यत्कथाविशेषमूलं सविस्तरं वेदे साक्षादुपलभ्यते तत्प्रसङ्गेऽपि तत्र तत्र स्थलविशेषे "पुराणेषु प्रसिद्धम्" इत्यादिवचनोपन्यासेनैव सन्तोषः कृतः। अस्य स्तोत्रस्य द्वितीयचतुर्थसप्तमविंशसप्तविंशाष्टाविंशपद्येषु

श्रुतित्रयीशब्दयोरन्यतरस्य प्रयोगदर्शनात् [1]सुप्राचीनत्वसाधकप्रमाणबाहुल्यविरहेऽप्यर्वाचीनत्वविनिगमकहेत्वनुपलम्भाच्च क्वचित्क्वचित्साक्षाद्वेदाश्रितत्वमेव सिध्यतीति नातितिरोहितं प्रेक्षावताम्। एवं बहुपद्योपवर्णितविषयविस्तरस्यागमपुराणेतिहासादेर्गृहीतत्वेऽप्यत्र कतिचित्पद्यानि वेदमेवोपजीव्य विरचितानि प्रतीयन्त इति तन्मूलान्वेषणमिह किञ्चित्प्रस्तूयते।

---

1 (अ) वैक्रमचतुर्दशशताब्दीपूर्वार्धकाले जैनश्रीसोमसुन्दरसूरिविरचितायां युगादिदेवस्तुतौ श्रीशिवमहिम्नःस्तोत्रस्यैकत्रिंशतः पद्यानामन्त्यान्त्यचरणसमस्यापूरणेनोपयोगो दृश्यते।' [ जैनग्रन्थावल्याः १३६ तमग्रन्थे २८७ तमपृष्ठावलोकनं कर्तव्यम्। ] युगादिदेवस्तुतिरचनाकालनिर्णये तु देवगिरीययादवमहाराजकृष्णदेवनामोल्लेख एव पर्याप्तं साधनम्।

(इ) त्रिंशदधिकैकादशशततमवैक्रमाब्दे भट्टारकगन्धध्वजादेशेन नीमाडप्रान्तान्तर्गतनर्मदादक्षिणतटस्थामरेश्वरदेवालये समुत्कीर्णमेकत्रिंशत्पद्यात्मकं श्रीशिवमहिम्नःस्तोत्रमुपलभ्यते। [ गोरखपुरप्रकाशितस्य 'कल्याण'-शिवाङ्कस्य ४६७-४७१ तमपृष्ठावलोकनं कर्तव्यम्। ]

(उ) वैक्रमदशमशताब्दीयमहाकविश्रीराजशेखरविरचितकाव्यमीमांसाया अष्टमाध्याये न्यायवैशेषिकीयतर्कप्रामाणिकवर्णनावसरे "स किमामर्शक ईश्वरः कर्ता? इति पूर्वपक्षः। निरतिशयैश्वर्यस्य तस्य कर्तृत्वमिति सिद्धान्तः। अत्र—" इतिग्रन्थसन्दर्भयोगेन

"किमीहः किंकायः स खलु किमुपायस्त्रिभुवनं
किमाधारो धाता सृजति किमुपादान इति च।
अतर्क्यैश्वर्ये त्वय्यनवसरदुःस्थो हतधियः
कुतर्कोऽयं कांश्चिन्मुखरयति मोहाय जगतः॥ [५] ॥"

इति महिम्नःस्तोत्रस्थपञ्चमपद्यमुदाहृतं दृश्यते [ गायकवाडप्राच्यग्रन्थमालायाः प्रथमग्रन्थस्य ३७तमे पृष्ठे ]।

(ऋ) नवमशताब्दीयकाश्मीरिकभट्टजयन्तकृतन्यायमञ्जर्यां षष्ठाह्निके पुष्पदन्तप्रसङ्गदृश्यमुपलभ्यते—"मनुना च पङ्क्तिपावनत्वेनाधिगतव्याकरणो मीमांसकश्च स्वस्मृतौ पठितौ 'यश्च व्याकुरुते वाचं यश्च मीमांसते गिर'-मिति। पुष्पदन्तोऽप्याह—

तत्र

प्रजानाथं नाथ प्रसभमभिकं स्वां दुहितरं
गतं रोहिद्भूतां रिरमयिषुमृष्यस्य वपुषा ।
धनुष्पाणेर्यातं दिवमपि सपत्राकृतममुं
त्रसन्तं तेऽद्यापि त्यजति न मृगव्याधरभसः ॥२२॥

इत्येतस्य पद्यस्य किं मूलमिति विचारोऽस्यास्मत्प्रस्तावस्य प्रथमो विषयः । अत्र श्रीमधुसूदनसरस्वत्यस्तावदाहुः—

"शर एव तथाऽऽरोपितः । स चार्द्रानक्षत्ररूपेण परिणत इति पुराणप्रसिद्धः ।" इति ।

रुद्रस्य क्रोधोत्साहविशेष एवार्द्रानक्षत्ररूपेण परिणत इति पुराणान्तरप्रसिद्ध्या द्रष्टव्यम् ।" इति ।

---

भ्रष्टः शापेन देव्याः शिवपुरवसतेर्यन्त्वहं मन्दभाग्यो
भाग्यं वा जन्मना मे यदि सलकलिले मर्त्यलोके सशोके ।
स्निग्धाभिर्दुग्धधारामलमधुरसुधाबिन्दुनिस्यन्दिनीभिः
कामं जायेय वैयाकरणभणितिभिस्तूर्णमापूर्णकर्णः ॥" इति ।

[ लाजरसकम्पनीप्रकाशितविजयनगरसंस्कृतग्रन्थमालादशमग्रन्थन्यायमञ्जरीप्रथमभागान्यपत्रस्य ४२६तमपृष्ठे । ]

(ख) न्यायमञ्जर्यां पुष्पदन्तोक्तत्वेनोद्धृतं पद्यं दृष्ट्वाध्यापककीथेन संस्कृतवाङ्मयेतिहासे २२१तमपृष्ठे 'पुष्पदन्त इत्येतन्नाम वास्तविकं न' इत्यूरीकृत्यापि 'महिम्नःस्तवो नवमशताब्द्या नार्वाचीनः' इति साधितम् ।

तद्यदि केनचित्कविना पुष्पदन्तोक्तिरूपेण विरचितं पद्यं न्यायमञ्जरीस्थपुष्पदन्तनामोल्लेखमात्रसम्बन्धेनैव महिम्नःस्तोत्रस्यापि पुष्पदन्तकृतत्वेन प्रसिद्धस्य भट्टजयन्तात्प्राचीनतरत्वसाधने पर्याप्तं प्रमाणमित्यङ्गीकर्तुं शक्यते तदा किं नामापराद्धं गुणाढ्यविरचितबृहत्कथायां तथैव प्रसङ्गेन पुष्पदन्ताभिधानोल्लेखेन यावता महिम्नःस्तवो बृहत्कथारचयितुर्गुणाढ्यादपि रचितपूर्व इति न साध्येत ? यतो जयन्तोदाहृतपद्ये 'देव्याः शापेन शिवपुरवसतेर्भ्रंष्टोऽहं मन्दभाग्यो वन्दी । यदि मर्त्यलोके मे जन्म

"एवं हि पुराणेषु प्रसिद्धम्—ब्रह्मा स्वदुहितरं सन्ध्यामतिरूपिणीमालोक्य कामवशो भूत्वा तामुपगन्तुमुद्यतः। सा चायं पिता भूत्वा मामुपगच्छतीति लज्जया मृगीरूपा बभूव। ततस्तां तथा दृष्ट्वा ब्रह्मापि मृगरूपं दधार। तच्च दृष्ट्वा त्रिजगन्नियन्त्रा श्रीमहादेवेनायं प्रजानाथो धर्मप्रवर्तको भूत्वाप्येतादृशं जुगुप्सितमाचरतीति महतापराधेन दण्डनीयो मयेति पिनाकमाकृष्य शरः प्रक्षिप्तः। ततः स ब्रह्मा व्रीडितः पीडितश्च सन् मृगशिरोनक्षत्ररूपो बभूव। ततः श्रीरुद्रस्य शरोऽप्यार्द्रानक्षत्ररूपो भूत्वा तस्य पश्चाद्भागे स्थितः।" इति च।

अयमेव प्रसङ्गः श्रीमद्भागवते तृतीयस्कन्धे द्वादशाध्यायेऽनेन प्रकारेणोपवर्णितो दृश्यते—

"वाचं दुहितरं तन्वीं स्वयम्भूर्हरतीं मनः।
अकामां चकमे क्षत्तः सकाम इति नः श्रुतम्॥ २८॥
तमधर्मे कृतमतिं विलोक्य पितरं सुताः।
मरीचिमुख्या मुनयो विस्रम्भात्प्रत्यबोधयन्॥ २९॥
नैतत् पूर्वैः कृतं त्वद्य न करिष्यन्ति चापरे।

---

भवेत्'—इत्यादिपुष्पदन्तोदन्तो बृहत्कथानिबद्धपुष्पदन्तवृत्तान्तेन पूर्णतया संवदति। तथा हि—

"पुष्पदन्तमथाहूय भ्रुकुटीभ्रमविभ्रमम्।
शशाप शैलतनया दधती कोपरागकम्॥ ६०॥
मर्त्यलोके पत क्षिप्रमिति मन्त्री समीरिते। ॥ ६१॥
कौशाम्बीवासिनः सुधु पुत्रनामप्रजन्मनः।
प्रयातः सोमदत्तस्य पुष्पदन्तो महीतले॥ ६९॥
कात्यायनः श्रुतधरस्तथा वररुचिश्च सः।
गुणिनामग्रणीर्लोके नामभिस्त्रिभिरुच्यते॥ ७०॥"

इति प्रथमतरङ्गे—

"निशम्येति वचस्तस्य शनैः कात्यायनः कथाम्।
सस्मार पुष्पदन्तोऽहमिति संविदमाश्रितः॥ ८॥

इति च द्वितीयतरङ्गे—क्षेमेन्द्रकृतबृहत्कथामञ्जर्याम्

यत् त्वं दुहितरं गच्छेरनिगृह्याङ्गजं प्रभुः ॥ ३० ॥
तेजीयसामपि ह्येतन्न सुश्लोक्यं जगद्गुरो ।
यद्वृत्तमनुतिष्ठन् वै लोकः क्षेमाय कल्पते ॥ ३१ ॥
तस्मै नमो भगवते य इदं स्वेन रोचिषा ।
आत्मस्थं व्यञ्जयामास स धर्मं पातुमर्हसि ॥ ३२ ॥
स इत्थं गृणतः पुत्रान् पुरो दृष्ट्वा प्रजापतीन् ।
प्रजापतिपतिस्तन्वं तत्याज व्रीडितस्तदा ॥ ३३ ॥" इति ।

---

तथा—"इति देव्या हरो यावद् वक्ति तावदुपागमत् ॥ ४८ ॥
प्रसादवित्तकः शम्भोः पुष्पदन्तो गणोत्तमः ।
न्यषेधि च प्रवेशोऽस्य नन्दिना द्वारि तिष्ठता ॥ ४९ ॥
निष्कारणं निषेधोऽद्य ममापीति कुतूहलात् ।
अलक्षितो योगवशात् प्रविवेश स तत्क्षणात् ॥ ५० ॥......
योगी भूत्वा प्रविश्येदं पुष्पदन्तस्तदाश्रृणोत् ॥ ५५ ॥
जयायै वर्णितं तेन कोऽन्यो जानाति हि प्रिये ॥
श्रुत्वेत्यानाययद् देवी पुष्पदन्तमतिक्रुधा ॥ ५६ ॥
मर्त्यो भवाविनीतेति विह्वलं तं शशाप सा ।
माल्यवन्तं च विज्ञप्तिं कुर्वाणं तत्कृते गणम् ॥ ५७ ॥"

इति प्रथमतरङ्गे—

"स्मृत्वा वररुचिर्जातिं सुप्तोत्थित इवावदत् ।
स एव पुष्पदन्तोऽहं मत्तस्तां च कथां शृणु ॥ २५ ॥"

इति च द्वितीयतरङ्गे—सोमदेवकृतकथासरित्सागरे बृहत्कथामूलक एव लेखो दृश्यते ।

असौ बृहत्कथोपवर्णितो भट्टजयन्तोदाहृतपद्यवक्तृत्वेनोपनिबद्धश्च पुष्पदन्तो महिम्नःस्तुतिकर्तुरभिन्न एवेति भेदसाधकमानाभावेऽवश्यमेपितव्यम् ।

एवमसौ सातवाहनसमकालिकगुणाढ्यसमयाद् बहुपूर्वं आस इति सिध्यते श्रीशिवमहिम्नःस्तोत्ररचनाकालः कीथोपदर्शितमरण्यैवेदानीमुपसहस्रद्वयाब्दमितोऽधिकोऽपि वा भवेदित्यवदातम् ।

भट्टकुमारिलैस्तु "अपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन्"[२] इति जैमिनीयमीमांसासूत्रव्याख्यानावसरेऽवादि—

"यत्त्वेतदपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन्निति सूत्रम् । अत्र सदाचारानुदाहृत्य त्रिवर्गसिद्ध्यर्थं विचार्यन्ते । तद्विपरीतसङ्कीर्णव्यवहारिषु शिष्टेष्वपथ्यकारिवैद्यातुरवदविस्रम्भणीयचरितत्वात् सम्भाव्यमानवेदमूलत्वाच्च धर्मसंशयं दर्शयित्वा 'धर्मस्य शब्दमूलत्वादशब्दमनपेक्ष्य'मिति पूर्वः पक्षः कश्चित्र 'विरोधे त्वनपेक्षम्'—इत्येतन्न्यायानुसारेण । सदाचारेषु हि दृष्टो धर्मव्यतिक्रमः साहसं च महतां प्रजापतीन्द्रवसिष्ठविश्वामित्रयुधिष्ठिरकृष्णद्वैपायनभीष्मधृतराष्ट्रवासुदेवार्जुनप्रभृतीनां बहूनामद्यतनानां च ।

"प्रजापतेस्तावत् । 'प्रजापतिरुषसमभ्यैत्स्वां दुहितरम्' इत्यगम्यागमनरूपादधर्माचरणाद्धर्मव्यतिक्रमः । इन्द्रस्यापि......(पृ० १२८).........अद्यत्वेऽप्यहिच्छत्रमथुरानिवासिब्राह्मणीनां सुरापानम् ।......उदीच्यानाम् ।......दाक्षिणात्यानाम् ।......उभयेषाम् ।......इति नैवञ्जातीयकमिश्रसदाचारधर्मत्वाध्यवसानसम्भवः ।...... (पृ० १२९)......तस्मान्निर्मूलत्वादनपेक्षाणि शिष्टाचरणानि ।

"इति प्राप्तेऽभिधीयते 'अपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन्निति ।

'दृष्टकारणहीनानि यानि कर्माणि साधुभिः ।
(पृ० १३०) प्रयुक्तानि प्रतीयेरन् धर्मत्वेनेह तान्यपि ॥
शरीरस्थितये यानि सुखार्थं वा प्रयुञ्जते ।
अर्थार्थं वा न तेष्वस्ति शिष्टानामेव धर्मधीः ॥
धर्मत्वेन प्रपन्नानि शिष्टैर्यानि तु कानिचित् ।
वैदिकैः कर्मसामान्यात् तेषां धर्मत्वमिष्यते ॥'

---

२ गायकवाडीयसंस्कृतग्रन्थमालायां प्रकाशिते कुमारिलतन्त्रवार्तिके पूर्वमीमांसाप्रथमाध्यायतृतीयपादसप्तमसूत्रव्याख्यानं १२३–१२४तमेषु पृष्ठेषु द्रष्टव्यम् ।

(पृ० १२३ )......"यत्तु 'प्रजापतिरुपसमभ्यैत् स्वां दुहितरम्' 'अहल्यायां मैत्रेय्यामिन्द्रो जार आसीत्' इत्येवमादिदर्शनादितिहासदर्शनाच्च शिष्टाचारेषु धर्मातिक्रमं पश्यद्भिः शिष्टाचारप्रामाण्यं दुरध्यवसानमिति । तत्रोच्यते—

'श्रुतिसामान्यमात्राद्वा न दोषोऽत्र भविष्यति ।
मनुष्यप्रतिषेधाद्वा तेजोबलवशेन वा ॥
यथा वा न विरुद्धत्वं तथा तद् गमयिष्यति ॥'

"प्रजापतिस्तावत् प्रजापालनाधिकारादादित्य एवोच्यते । स चारुणोदय-वेलायामुषसमुपसमभ्यैत् सा तदागमनादेवोपजा( पृ० १२४ )यत इति तद्दुहितृत्वेन व्यपदिश्यते तस्यां चारुणकिरणाख्यबीजनिक्षेपात् स्त्रीपुरुषयोगवदुपचारः ।" इति ।

इत्थं भट्टपादैरस्याः प्रसिद्धकथाया मूलत्वेन "प्रजापतिरुपसमभ्यैत्स्वां दुहितरम्" इत्यादिका श्रुतिरुपन्यस्ता ।

सा चेयं ताण्ड्यमहाब्राह्मण एवमाम्नाता—

३ " प्रजापतिरुपसमभ्यैत् स्वां दुहितरं तस्य रेतः परापतत् तदस्यां न्यषिच्यत तदश्रीणादिदं मे मा दुषदिति तत्सदकरोत् पशूनेव ।" इति ।

भट्टपादोक्तसमाधानमूलमपि तत्रैवेत्थं श्रूयते—

४ "वाग्वै त्रिरात्रो ००० (पृ० ५७१)। त्रयो गन्धर्वाः... त्रयो घर्मास उपस सचन्ते ॥२॥ अग्निरुपस सचते वायुरुपस सचतेऽसावादित्य उपस सचते ॥३॥ ( पृ०५७२ ) । त्रीणि मिथुनानि तान्येषः ॥४॥ (पृ० ५७३) ।" इति ।

इयं कथा शाखान्तरेष्वपि श्रूयते । तथा हि —

---

३ कलिकातीयबिब्लियोथेका-इण्डिका-संस्करणे ताण्ड्यमहाब्राह्मणस्य प्रथमभाग-(८।२।१०)गतः सन्दर्भः ४८६तमपृष्ठे द्रष्टव्यः ।

[अस्यामित्यस्य पृथिव्यामिति । अश्रीणादित्यस्यापचदिति । मा दुषदित्यस्य दुष्टं मा भूदिति चार्थौ भाष्याज्ज्ञेयः ।]

४ यथोक्तस्य ताण्ड्यब्राह्मणस्य द्वितीयभागे । [ सचते सेवते । ]

५ "प्रजापतिर्ह वै स्वां दुहितरमभिदध्यौ । दिवं वोषसं वा मिथुन्येनया स्यामिति ताँ सम्बभूव ॥१॥ तद् वै देवानामाग आस । य इत्थँ स्वां दुहितरमस्माकँ स्वसारं करोतीति ॥२॥ ते ह देवा ऊचुः । योऽयं देवः पशूनामीष्टेऽतिसन्धं वाऽअयं चरति य इत्थँ स्वां दुहितरमस्माकँ स्वसारं करोति विध्येममिति तँ रुद्रोऽभ्यायत्य विव्याध तस्य सामि रेतः प्रचस्कन्द तथेन्नूनं तदास ॥३॥ तस्मादेतदृषिणाभ्यनूक्तम् । पिता यत् स्वां दुहितरमधिष्कन् क्ष्मया रेतः सञ्जग्मानो निषिञ्चदिति तदाग्निमारुतमित्युक्थं तस्मिंस्तद् व्याख्यायते यथा तद् देवा रेतः प्राजनयंस्तेषां यदा देवानां क्रोधो व्यैदथ प्रजापतिमभिषज्यंस्तस्य तँ शल्यं निरकृन्तन्त्स वै यज्ञ एव प्रजापतिः ॥४॥ ते होचुः । उपजानीत यथेदं नामुयासत् कनीयो हाहुतेर्यथेदँ स्यादिति ॥५॥"

—इति शतपथब्राह्मणस्य प्रथमकाण्डे [ षष्ठप्रपाठके द्वितीयब्राह्मणे ] सप्तमाध्याये चतुर्थब्राह्मणे ।

'योऽयं देवः पशूनामीष्टे' स 'पशूनाम्पती रुद्रः' इति प्रथमकाण्ड एव पञ्चप्रपाठकीयप्रथमब्राह्मणे [ सप्तमाध्यायगततृतीयब्राह्मणे ] 'यो ह्येव सविता स प्रजापतिः' इति च द्वादशकाण्डे द्वितीयप्रपाठकीयद्वितीयब्राह्मणस्य [तृतीयाध्यायगतपञ्चमब्राह्मणस्य] प्रथमकण्डिकायां शतपथब्राह्मण एवोक्तम् ।

एवमेव—

६ "प्रजापतिर्वै स्वां दुहितरमभ्यध्यायद् । दिवमित्यन्य आहुरुषसमित्यन्ये । तामृश्यो भूत्वा रोहितं भूतामभ्यैत् । तं देवा अपश्यन्नकृतं वै प्रजापतिः

५ [ प्रजापतिः प्राणपिण्ड-लोक-काल-यज्ञात्मा अभिध्यातवान् । लोकात्मना दिवं कालात्मना उषसं प्राणपिण्डात्मना ऋश्यो मृगो रोहितं रोहिणी नाम नक्षत्रं यज्ञात्मना यज्ञम् ॥ १ ॥ तद् दुहितृगमनं देवानां चेतसि अपराधो बभूव ॥ २ ॥ अतिसन्धं मर्यादामतीत्य । विध्य इमं ताडय इषुणा । तथेन्नूनं यस्मात्तथैव ॥ ३ ॥ ऋषिणा मन्त्रेण । अधिष्कन् अधिस्कन्नः । सङ्गतः सन् क्ष्मायां पृथिव्यां यद् रेतः अभिषिक्तवान् [ निषेकमकरोत् ] ॥ ४ ॥ यदिदमितोऽस्माकं यज्ञरूपमिति तद् यथा न ऊनं स्याद् यथा च प्रधानाहुतेर्न महत् स्यात्तथोपायं जानीतेति ॥ ५ ॥ ]

६ [ ऋश्यः मृगविशेषः ( अमर० २।५।१० ) । रोहितं भूता लोहिते प्रभा

करोतीति। ते तमैच्छन् य एनमारिष्यत्येतमन्योन्यस्मिन्नाविन्दंस्तेषां या एव घोरतमास्तन्व आसंस्ता एकधा समभरंस्ताः सम्भृता एष देवोऽभवत्। तदस्यैतद् भूतवन्नाम। भवति वै स योऽस्यैतदेवं नाम वेद। तं देवा अब्रुवन्नयं वै प्रजापतिरकृतमकरिमं विध्येति। स तथेत्यब्रवीत्। स वै वो वरं वृणा इति वृणीष्वेति। स एतमेव वरमवृणीत पशूनामाधिपत्यम्। तदस्यैतत्पशुमन्नाम। पशुमान् भवति योऽस्यैतदेवं नाम वेद। तमभ्यायत्याविध्यत्। स विद्ध ऊर्ध्व उदप्रपतत्। तमेतं मृग इत्याचक्षते। य उ एव मृगव्याधः। स उ एव स यां रोहित् सा रोहिणी। यो एवेषुस्त्रिकाण्डा। सो एवेषुस्त्रिकाण्डा। तद्वा इदं प्रजापते रेतः सिक्तमधावत् तत् सरोऽभवत्। ते देवा अब्रुवन् मेदं प्रजापते रेतो दुषदिति। यदब्रुवन् मेदं प्रजापते रेतो दुषदिति। तन्मादुषमभवत्। तन्मादुषस्य मादुषत्वं मादुषं ह वै नामैतद् यन्मानुषम्। तन्मादुषं सन्मानुषमित्याचक्षते परोक्षेण। परोक्षप्रिया इव हि देवाः॥ ९ (३३)॥"

---

ऋतुमती जातेत्यर्थः। अभ्यैत् मिथुनधर्मं प्राप्तवान्। अकृतं वै अकर्तव्यमेव निषिद्धाचरणम्। आरिष्यति आर्त्तिं प्रापयितुं क्षमः। ऐच्छन् अन्वेषणं कृतवन्तः। एतं प्रजापतिघातकं नालभन्त त्वं हन्तुं शक्नोषि त्वं हन्तुं शक्नोषीति परस्परं पृष्ट्वा एकैकस्य शक्तिराहित्यं निश्चितवन्तः। सर्वेषु देवेषु या एव काश्चिद् घोरतमाः तन्वः अत्युग्राणि शरीराण्यासन् ताः सर्वा मेलयित्वैकमेव शरीरं कृतवन्तः। ता एकत्वेन सम्पादिताः सत्यः। एष इति हस्तेन प्रदर्श्य रुद्रोऽभिधीयते। भूतपतिरिति भूतवन्नाम। अथ तेन रुद्रेण सह देवानां संवादं दर्शयति—हे रुद्र अयं प्रजापतिः अकृतम् अकः निषिद्धाचरणं कृतवान् तस्मादिमं विध्य बाणेन प्रहरेति। स रुद्रः तदङ्गीकृत्य उत्कोचत्वेन पशूनामाधिपत्यं कृतवान्। तस्मात्कारणादस्य रुद्रस्य एतत् लोकप्रसिद्धं पशुपतिरित्येतादृशं पशुशब्दोपेतं नाम सम्पन्नम्। स रुद्रः। अभ्यायत्य बाणयुक्तं धनुरभित आकृष्य तं प्रजापतिमविध्यत्। ऋश्यमृगरूपः स प्रजापतिः विद्धः सन् ऊर्ध्वमुखः उदप्रपतत् प्रकर्षेणोत्पतनमकरोत्। तमेतमुत्पतितमृश्यमृगरूपं प्रजापतिमाकाशे दृष्ट्वा सर्वे एव एते जनाः मृग इत्याचक्षते रोहिण्यार्द्रयोर्नक्षत्रयोर्मध्येऽवस्थितं मृगशीर्षनक्षत्रं कथयन्ति। नक्षत्ररूपेण निष्पन्न इत्यर्थः। यस्तु रुद्रः मृगव्याधो मृगघाती स आकाशे दृश्यमानो लोकप्रसिद्धो मृगव्याध आसीत्। या दुहिता रक्तवर्णा मृगी सा इयमाकाशे रोहिणीनक्षत्रमभूत्। या तु रुद्रेण प्रेरिता इषुः त्रिकाण्डा—'अनीकं शल्यः तेजनम्' इति—अवयव-

—इत्यैतरेयब्राह्मणस्य तृतीयपञ्चिकायां तृतीयाध्याये नवमः खण्डः ।

उद्धृतेष्वेषु सर्वेषु वाक्येष्वैतरेयब्राह्मणोक्तकथैव महिम्नःस्तोत्रस्थद्वाविंशपद्यमूलभूतेत्यसन्दिग्धत्वेन प्रतीयते ७शब्दानामपि सविशेषसंवादात् ।

मन्त्रब्राह्मणात्मकवेदे तु न केवलं ब्राह्मणभागेऽस्याः कथाया वर्णनमुपलभ्यते यावन्मन्त्रभागेऽप्यस्या नातिसंक्षिप्तं स्वरूपं दृश्यते । तथा ह्यृग्वेदसंहितायां दशममण्डल एकषष्टितमसूक्ते—

८ "प्रथिष्ट यस्य वीरकर्ममिष्णदनुष्ठितं नु नर्यो अपौहत् ।
पुनस्तदा वृहति यत्कनाया दुहितुरा अनुभृतमनर्वा ॥ ५ ॥
मध्या यत्कर्त्वमभवदभीके कामं कृण्वाने पितरि युवत्याम् ।
मनानग् रेतो जहतुर्वियन्ता सानौ निषिक्तं सुकृतस्य योनौ ॥ ६ ॥

---

त्रयोऽपि ता एव लोकप्रसिद्धा इषुः बाणोऽभवत् । अथ मनुष्योत्पत्तिं दर्शयति—मृगरूपेण प्रजापतिना यद्रेतो भूम्यां सिक्तं तदेतदतिबहुत्वाद् भूमौ पतितं सत् प्रवाहरूपेणाधावत् । तच्च क्वचिन्निम्नदेशेऽवस्थाय प्रौढं सरोऽभूत् । ते देवा एवमब्रुवन् प्रजापतेरिदं रेतो दुष्टमस्त्वयं मा भूदिति । तस्माद्दोषरहितस्य रेतसो मादुषमिति नाम सम्पन्नम् । तद् वस्तुतो दैवाचारेण दोषरहितत्वान्मादुषमेव परोक्षेण नाम्ना व्यवहर्तव्यमित्यभिप्रेत्य वर्णव्यत्ययेन मानुषमित्याचक्षते ब्राह्मणक्षत्रियादिशरीरम् । लोके हि देववत्पूज्या 'उत्तमाः पुरुषाः प्रत्यक्षे मातापितृनिर्मिते देवदत्तादिनाम्नि प्रीतिं न कुर्वन्ति किन्तु 'उपाध्यायः' 'आचार्यः' 'स्वामी' इत्यादिके मातापित्रादीनामकल्पितत्वेन परोक्षे नाम्नि प्रीतिं कुर्वन्ति । तस्मात्परोक्षत्वाय नकारप्रक्षेपो युज्यते ॥ ६ ॥ ]

७ 'रोहिद्भूताम्' 'ऋश्यस्य वपुषा' 'सपत्राकृतं दिवं यान्तम्' 'मृगव्याध—' इति महिम्नःस्तोत्रे प्रयुक्तानां शब्दानां यथाक्रमं मूलभूता 'रोहितं भूतां [ या रोहित् सा रोहिणी ]' 'ऋश्यो भूत्वा' 'स विद्ध ऊर्ध्व उदप्रपतत्' 'मृगव्याधः' इत्यैतरेयब्राह्मणगता एव शब्दा न तु श्रुत्यन्तरगताः पुराणादिगता वेत्यैतरेयश्रुतिमूलकत्वमेवोक्तपद्यार्थस्य सिध्यन्ति ।

८ [ यस्य प्रजापतेर्वीरकर्मं (येन रेतसोत्पन्ना वीरा भवन्ति तादृशं रेत इत्यर्थः) प्रथितमासीत् तद् रेतः प्रजापतिनाऽपत्यार्थं निषिक्तं नरेभ्यो नेतृभ्यो देवे-

पिता यत् स्वां दुहितरमधिष्कन् क्ष्मया रेतः सञ्जग्मानो नि षिञ्चत् ।
स्वाध्योऽजनयन् ब्रह्म देवा वास्तोष्पतिं व्रतपां निरतक्षन् ॥ ७ ॥" इति ।

अथर्ववेदसंहितायां नवमकाण्डस्थदशमसूक्तान्तःपातिद्वादशमन्त्रे पितुः सकाशाद् दुहितुर्गर्भाधानवचनं मूलतोऽस्याप्यर्थस्य द्योतकत्वेनाङ्गीकर्तुं शक्यते । यथा—

"द्यौर्नः पिता जनिता नाभिरत्र बन्धुर्नो माता पृथिवी महीयम् ।
उत्तानयोश्चम्वोर्योनिरन्तरत्रा पिता दुहितुर्गर्भमाधात् ॥ १२ ॥" इति ।

ऋक्संहितायां तु प्रथममण्डलीयचतुःषष्ट्यधिकशततमसूक्तेऽस्य मन्त्रस्य पाठ एवंरूप उपलभ्यते—

"द्यौर्मे पिता जनिता नाभिरत्र बन्धुर्मे माता पृथिवी महीयम् ।
उत्तानयोश्चम्वोर्योनिरन्तरत्रा पिता दुहितुर्गर्भमाधात् ॥ ३३ ॥" इति ।

एवमस्माभिर्महिम्नःस्तोत्रस्थस्य द्वाविंशपद्यार्थस्य वेदमूलकत्वं सुस्पष्टतया प्रदर्शितम् ।

---

भ्यो वा हितो रुद्रोऽभ्योहति । पुनस्तद् रेतः सर्वत उत्खिदति ( उद्गमयति पुरुषाकारेण स्वयमुत्पन्नः सन् ) रुद् रेतः कान्तायाः स्वपुत्र्याः ( तस्यामित्यर्थः । प्रजापतिना ) आसीदनुभृतम् । कीदृशो रुद्रः । अनर्वान्यस्मिन्नप्रत्यृतः । "प्रजापतिर्वै स्वां दुहितरमभ्यध्यायद् दिवमित्यन्य आहुरुषसमित्यन्ये" इति ब्राह्मणम् ॥ ५ ॥ यथेच्छं कुर्वाणे पितरि प्रजापतौ युवत्यां दुहितर्युषसि दिवि वा तयोर्मध्येऽन्तरिक्षमध्ये वा समीपे यत्कर्माभवन्मिथुनीभावाख्यं तदानीं मनानगल्पं रेतस्त्यक्तवन्तौ । किं कुर्वाणौ । वियन्तौ परस्परमभिगच्छन्तौ । प्रजापतिना समुच्छ्रिते स्थाने यज्ञस्य योनौ निषिक्तमासीदित्यर्थः ॥ ६ ॥ पिता प्रजापतिर्यदा स्वां दुहितरं दिवमुषसं वाऽभ्यस्कन्दत् तदानीमेव पृथिव्या सह सङ्गच्छमानः प्रजापतिरस्मिँल्लोके रोहितो भूत्वा रेतो नि षिञ्चत् । निषेकमकरोत् । "तामृश्यो भूत्वा रोहितं भूतामभ्यैत्" इति ब्राह्मणम् । तदानीं सुध्यानाः सुकर्माणो वा देवा ब्रह्मोदपादयन् । किं तद् ब्रह्मेति तदाह । यज्ञवास्तुन्यामिनं व्रतस्य कर्मणो रक्षःप्रभृतिभ्यः पालकं ( रुद्रं ) समुदपादयन् । यज्ञवास्तुन्यामिन्नं दृष्ट्वा कर्मरक्षकत्वेन निर्मितवन्त इत्यर्थः ॥ ७ ॥ ]

अधुना षड्विंशाष्टाविंशपद्ययोर्वैदिकमूलान्वेषणं प्रस्तूयते। ते च पद्ये—

त्वमर्कस्त्वं सोमस्त्वमसि पवनस्त्वं हुतवह-
स्त्वमापस्त्वं व्योम त्वमु धरणिरात्मा त्वमिति च।
परिच्छिन्नामेवं त्वयि परिणता बिभ्रतु गिरं
न विद्मस्तत् तत्त्वं वयमिह तु यत् त्वं न भवसि॥२६॥ इति।
भवः शर्वो रुद्रः पशुपतिरथोग्रः सहमहां-
स्तथा भीमेशानाविति यदभिधानाष्टकमिदम्।
अमुष्मिन् प्रत्येकं प्रविचरति देव श्रुतिरपि
प्रियायास्मै धाम्ने प्रविहितनमस्योऽस्मि भवते॥२८॥ इति च।

अत्र प्रथमपद्यव्याख्यानावसरे—

"एते चाष्टौ श्रीरुद्रमूर्तित्वेनागमप्रसिद्धा वक्ष्यमाणभवादिनामाष्टकसहिताश्चतुर्थ्यन्ता नमोन्ता अष्टौ मन्त्रा भवन्ति ते गुरूपदेशेन ज्ञातव्याः। एतदष्टमूर्तित्वं चान्यत्राप्युक्तम्—

'क्षितिहुतवहक्षेत्रज्ञाम्भःप्रभञ्जनचन्द्रम-
स्तपनवियदित्यष्टौ मूर्तीर्नमो भव बिभ्रते।' इति

नेन सर्वात्मकमपि व्योमर्काद्यष्टमात्रमूर्तिं वदन्तीत्यर्थः।" इति।

एवमेव द्वितीयपद्यव्याख्यानोपक्रमे—

"(१) श्रुतिर्वेदः प्रविचरति प्रकर्षेण बोधकतया चरति। वर्तत इत्यर्थः। अपिशब्दात् स्मृतिपुराणागमादिकमपि। (२) अथवा प्रणव इत्यामुष्मिन्नपि श्रुतिः प्रविचरतीति योज्यम्। यद्यप्यष्टाध्यायार्थकाण्डे वह्निनामत्वेनैतानि समाम्नातानि तथापि वह्नेर्भगवद्विभूतित्वात् तन्नामत्वेऽपि न भगवन्नामत्वव्याघातः। (३) यद्वा अमुष्मिन्नामाष्टके देवानां ब्रह्मादीनामपि श्रुतिः श्रवणेन्द्रियं प्रविचरति सावधानतया वर्तते।" इति, "महता महच्छब्देन सह वर्तत इति सहमहान् महादेवः। तथैवागमप्रसिद्धः।" इति च—

—श्रीमधुसूदनसरस्वत्य आहुः ।

तत्रागमशास्त्रप्रमाणितोऽयमर्थ इत्येतस्मिन् विषये श्रीसायणाचार्या अप्यथर्ववेदसंहिताया एकादशकाण्डगतद्वितीयसूक्तस्थप्रथममन्त्रस्य[१] भाष्ये—

"एतदादिसूक्तत्रयेण भौमान्तरिक्षाद्युत्पातदोषनिवृत्तये अष्टमूर्तिर्महादेवः प्रार्थ्यते । ताश्च पारमेश्वर्यो मूर्तयः आगमिकैरेवमनुक्रान्ताः—

'शर्वं[१] पशुपतिं[२] चोग्रं[३] रुद्रं[४] भव[५]मथेश्वरम्[६] ।
महादेवं[७] च भीमं[८] च'—इति ।

"तासामुत्पत्तिः शतपथब्राह्मणे षष्ठकाण्डे 'असद्वा इदमग्र आसीत्' [६।१।१।१] इत्यादिना प्रपञ्चिता । तत्र सृष्ट्यादौ भवति यस्मात्सर्वं जगदिति भवः । शृणाति सर्वं जगद्धिनस्ति संहृतिसमये इति शर्वः । स्थितिकालवर्तिनीनामन्यासां मूर्तीनामुपसङ्ग्रहाय सृष्टिसंहृतिकारिण्यौ आद्यन्तवर्तिन्यौ परमेश्वरस्य मूर्ती निर्दिश्येते ।"

—इत्याहुः ।

एतदेवेशमूर्त्यष्टकमधिकृत्य कविकुलगुरुः श्रीकालिदासोऽभिज्ञानशाकुन्तलाख्यनाटकं प्रारिप्सुः "या सृष्टिः स्रष्टुराद्या"—इत्याद्याशिषं प्रयुयुजे । तद्व्याख्याने च राघवभट्टः—

"धराम्भोऽग्निमरुद्व्योममखेशेन्द्वर्कमूर्तिभिः ।"

इत्यादिसमासयुक्तिमुपन्यस्तवान । एवमेव रघुवंशद्वितीयसर्गस्थस्य "अवेहि मां किङ्करमष्टमूर्तेः"—इत्यस्य पञ्चत्रिंशपद्यांशस्य सञ्जीवन्यां मल्लिनाथः—

'पृथिवी सलिलं तेजो वायुराकाशमेव च ।
सूर्याचन्द्रमसौ सोमयाजी चेत्यष्टमूर्तयः ॥'

---

१ स चाथर्वणमन्त्रः—

भवाशर्वौ मृडतं माभि यातं भूतपती पशुपती नमो वाम् ।
प्रतिहितामायतां मा वि स्राष्टं मा नो हिंसिष्ट द्विपदो मा चतुष्पदः ॥ १ ॥
इति ।

—इति शादयवचनमुदलिखत् ।

शिवपुराणे तु शतरुद्रसंहितायां द्वितीयेऽध्याये—

"नन्दीश्वर उवाच—

शृणु तात महेशस्यावतारान् परमान् प्रभो ।
सर्वकार्यकराँल्लोके सर्वस्य सुखदान् मुने ॥ १ ॥
तस्य शम्भोः परेशस्य मूर्त्यष्टकमयं जगत् ।
तस्मिन् व्याप्य स्थितं विश्वं सूत्रे मणिगणा इव ॥ २ ॥
शर्वो[1] भव[2]स्तथा रुद्र[3] उग्रो[4] भीमः[5] पशोः[6]पतिः ।
ईशान[7]श्च महादेवो[8] मूर्तयश्चाष्ट विश्रुताः ॥ ३ ॥
भू[1]र्यम्भो[2]ऽग्नि[3]मरुद्[4]व्योम[5]क्षेत्रज्ञा[6]र्क[7]निशाकराः[8] ।
अधिष्ठिताश्च शर्वाद्यैरष्टरूपैः शिवस्य हि ॥ ४ ॥
धत्ते चराचरं विश्वं रूपं विश्वम्भरात्मकम् ।
शङ्करस्य महेशस्य शार्वस्यैवेति निश्चयः ॥ ५ ॥
सञ्जीवनं समस्तस्य जगतः सलिलात्मकम् ।
भव इत्युच्यते रूपं भवस्य परमात्मनः ॥ ६ ॥
बहिरन्तर्जगद् विश्वं बिभर्ति स्पन्दते स्वयम् ।
उग्र इत्युच्यते सद्भी रूपमुग्रस्य सत्प्रभोः ॥ ७ ॥
सर्वावकाशदं सर्वव्यापकं गगनात्मकम् ।
रूपं भीमस्य भीमाख्यं भूपवृन्दस्य भेदकम् ॥ ८ ॥
सर्वात्मनामधिष्ठानं सर्वक्षेत्रनिवासकम् ।
रूपं पशुपतेर्ज्ञेयं पशुपाशनिकृन्तनम् ॥ ९ ॥
सन्दीपयज्जगत्सर्वं दिवाकरसमाह्वयम् ।
ईशानाख्यं महेशस्य रूपं दिवि विसर्पति ॥ १० ॥
आप्याययति यो विश्वममृतांशुर्निशाकरः ।
महादेवस्य तद् रूपं महादेवस्य चाह्वयम् ॥ ११ ॥
आत्मा तस्याष्टमं रूपं शिवस्य परमात्मनः ।
व्यापिकेतरमूर्तीनां विश्वं तस्माच्छिवात्मकम् ॥ १२ ॥

शाखाः पुष्यन्ति वृक्षस्य वृक्षमूलस्य सेचनात्
तद्वदस्य वपुर्विश्वं पुष्यते च शिवार्चनात् ॥१३॥
यथेह पुत्रपौत्रादेः प्रीत्या प्रीतो भवेत्पिता ।
तथा विश्वस्य सम्प्रीत्या प्रीतो भवति शङ्करः ॥१४॥
क्रियते यस्य कस्यापि देहिनो यदि निग्रहः ।
अष्टमूर्तेरनिष्टं तत्कृतमेव न संशयः ॥१५॥
अष्टमूर्त्यात्मना विश्वमधिष्ठायास्थितं शिवम् ।
भजस्व सर्वभावेन रुद्रं परमकारणम् ॥१६॥"

—इत्येवंरूपं शिवनामाष्टकमूर्त्यष्टकयोर्विवरणं दृश्यते ।

१०बौधायनधर्मसूत्रे ( बौधायनस्मृतौ ) द्वितीयप्रश्नगतपञ्चमाध्याये—

"ओं भवं देवं तर्पयामि ॥५७॥ ओं शर्वं देवं तर्पयामि ॥५८॥ ओमीशानं देवं तर्पयामि ॥५९॥ ओं पशुपतिं देवं तर्पयामि ॥६०॥ ओं रुद्रं देवं तर्पयामि ॥६१॥ ओमुग्रं देवं तर्पयामि ॥६२॥ ओं भीमं देवं तर्पयामि ॥६३॥ ओं महान्तं देवं तर्पयामि ॥६४॥

"ओं भवस्य देवस्य पत्नीं तर्पयामि ॥६५॥ ओं शर्वस्य देवस्य पत्नीं तर्पयामि ॥६६॥ ओमीशानस्य देवस्य पत्नीं तर्पयामि ॥६७॥ ओं पशुपतेर्देवस्य पत्नीं तर्पयामि ॥६८॥ ओं रुद्रस्य देवस्य पत्नीं तर्पयामि ॥६९॥ ओमुग्रस्य देवस्य पत्नीं तर्पयामि ॥७०॥ ओं भीमस्य देवस्य पत्नीं तर्पयामि ॥७१॥ ओं महतो देवस्य पत्नीं तर्पयामि ॥७२॥

"ओं भवस्य देवस्य सुतं तर्पयामि ॥७३॥ ओं शर्वस्य देवस्य सुतं तर्पयामि ॥७४॥ ओमीशानस्य देवस्य सुतं तर्पयामि ॥७५॥ ओं पशुपतेर्देवस्य सुतं तर्पयामि ॥७६॥ ओं रुद्रस्य देवस्य सुतं तर्पयामि ॥७७॥ ओमुग्रस्य देवस्य

---

१० बौधायनधर्मसूत्रं गोविन्दस्वामिविवरणोपेतं ( महीसुरीयचिन्निलओथेकासंस्कृता-गत-चतुस्त्रिंशाङ्के प्रकाशितं ) २३४-२३६तमपृष्ठेषु द्रष्टव्यम् । पुण्यपत्तनस्थानन्दाश्रम-संस्कृतग्रन्थावलावष्टचत्वारिंशग्रन्थाङ्कतया प्रकाशिते 'स्मृतीनां समुच्चये' बौधायनस्मृतिर्वा ४२४-४२५तमपृष्ठयोर्द्रष्टव्या ।

सुतं तर्पयामि ॥७८॥ ओं भीमस्य देवस्य सुतं तर्पयामि ॥७९॥ ओं महतो देवस्य सुतं तर्पयामि ॥८०॥"

इत्येते तर्पणमन्त्राः प्रणवव्याहृतित्रयसावित्र्यात्मकपञ्चब्रह्मयज्ञेभ्यो द्वाविंश-सूत्रे प्राप्तोल्लेखेभ्योऽनन्तरमनुक्रान्तस्य देवतातर्पणस्यान्तःपातिनो दृश्यन्ते ।

एष्वागमपुराणसूत्रवाक्येषु भव[1]-शर्वे[2]शान[3]-पशुपति[4]-रुद्रो[5]ग्र[6]-भीम[7]-महादेवे[8]ति नामानि महिम्नःस्तोत्रस्थक्रमभेदेनोपलभ्यन्ते ।

[11]एवमेव हिरण्यकेशिगृह्यसूत्रे द्वितीयप्रश्ने तृतीयपटलेऽष्टमखण्डेऽपि—

"व्याहृतिपर्यन्तं कृत्वौदनानभ्याहृत्य जुहोति । भवाय देवाय स्वाहा । रुद्राय देवाय स्वाहा । शर्वाय देवाय स्वाहा । ईशानाय देवाय स्वाहा । पशुपतये देवाय स्वाहा । उग्राय देवाय स्वाहा । भीमाय देवाय स्वाहा । महते देवाय स्वाहा । इति ॥ ६ ॥

"अथ पत्न्योदनस्य पत्न्यै जुहोति । भवस्य देवस्य पत्न्यै स्वाहा । रुद्रस्य देवस्य पत्न्यै स्वाहा । शर्वस्य देवस्य पत्न्यै स्वाहा । ईशानस्य देवस्य पत्न्यै स्वाहा । पशुपतेर्देवस्य पत्न्यै स्वाहा । उग्रस्य देवस्य पत्न्यै स्वाहा । भीमस्य देवस्य पत्न्यै स्वाहा । महतो देवस्य पत्न्यै स्वाहा । इति ॥ ७ ॥"

इति शौलगवे [ शूलगवो रुद्रस्तद्देवताके ] कर्मणि [ 'अष्टाहुतीः शूलगवौदनस्य जुहोति' इत्यादिमातृदत्तव्याख्यानुसारेण ] भव[1]-रुद्र[2]-शर्वे[3]शान[4]-पशु[5]-पत्यु[6]ग्र-भीम[7]-महादेवे[8]ति नामानि भिन्नक्रमाण्येव दृश्यन्ते ।

अनन्तरोक्तोभयग्रन्थगतभवादिविषया मन्त्रा मूलतः कस्मिन्वेदे क पठिता आसन्निति ज्ञातुं न शक्यतेऽद्यावधिप्रकाशितवेदग्रन्थेष्वेषामनुपलम्भात् ।

तदेवमस्मदन्वेषणगोचरे हिरण्यकेशिगृह्यसूत्रे बौधायनधर्मसूत्रे शिवपुराणादौ वा न क्वापि महिम्नःस्तोत्रपद्ययोर्मूलं वर्तते तत्र तत्र प्राप्तभवादिनामसु क्रमभेददर्शनान्महिम्नःस्तोत्रे साक्षाच्छ्रुतिशब्दस्यैव प्रयोगदर्शनाच्च ।

---

११ 'डाक्टर जे० किर्स्ते' इत्यनेन सम्पादिते वियेनानगरीयमुद्रणालये-इत्येतेन च १८८९ तमख्रिस्ताब्दे प्रकाशिते हिरण्यकेशिगृह्यसूत्रे १०-११ पृष्ठयोर्द्रष्टव्यम् ।

न च श्रीमधुसूदनकृतश्रुतिशब्दव्याख्यानत्रयमध्यादाद्यान्त्ययोर्विकल्पयोरन्यतराश्रयणे प्रकृतार्थस्य श्रुतिमूलत्वानपेक्षतया पुराणादिमूलत्वमेव किं नेष्टं स्यादिति वाच्यं 'श्रुतिरपी-'त्यत्र कैमुतिकन्यायेन ग्रन्थान्तरापेक्षया परमप्रमाणभूतायाः श्रुतेरेव ग्रहणे तात्पर्यावधारणाद् द्वितीयस्यैव व्याख्यानस्य वस्तुतत्त्वनिदर्शकतयोपादेयत्वेन विकल्पासङ्गतेः।

श्रीमधुसूदनाचार्याणाम् "अष्टाध्यायार्थकाण्डे" इति वचनस्य को मूलपाठः को वास्यार्थः किं वामुना ते रुद्राष्टाध्यायीं वाथर्वणसंहिताकाण्डविशेषं वा शतपथब्राह्मणकाण्डविशेषं वा परामिमृक्षन्नित्येतदवलोकनसमकालमेव निश्चयेन वक्तुं न शक्यते। अत एव तत्तद्वेदग्रन्थावलोकनमप्यावश्यकं भवति।

तत्र तावद् ये रुद्राष्टाध्याय्याः सप्तमाध्याये पठिता आद्यास्त्रयो मन्त्रास्तेषु भवादिनामान्युपलभ्यन्ते। ते तु शुक्लयजुर्वेदसंहिताया एकोनचत्वारिंशेऽध्याये सप्तमाष्टमनवमा अग्निपरत्वेन व्याख्यातास्च भाष्यकृद्भिः। ते चेमे—

"उग्रश्च भीमश्च ध्वान्तश्च धुनिश्च। सासह्वांश्चाभियुग्वा च विक्षिपः स्वाहा॥ ७॥

"अग्निꣳ हृदयेनाशनिꣳ हृदयाग्रेण पशुपतिं कृत्स्नहृदयेन भवं यक्ना। शर्वं मतस्नाभ्यामीशानं मन्युना महादेवमन्तःपर्शव्येनोग्रं देवं वनिष्ठुना वसिष्ठहनुःशिङ्गीनि कोशाभ्याम्॥ ८॥

"उग्रं लोहितेन मित्रꣳ सौव्रत्येन रुद्रं दौर्व्रत्येनेन्द्रं प्रक्रीडेन मरुतो बलेन साध्यान् प्रमुदा। भवस्य कण्ठ्यꣳ रुद्रस्यान्तःपार्श्व्यं महादेवस्य यकृच्छर्वस्य वनिष्ठुः पशुपतेः पुरीतत्॥ ९॥" इति।

अत्र यद्यप्युग्र[१]-भीम[२]-पशुपति[३]-भव[४]-शर्वे[५]शान[६]-महादेव[७]-रुद्रे[८]त्यभिधानानामुल्लेखः स्पष्टं प्राप्यते तथाप्यत्रैव श्रुतावेषां वह्निनामत्वेन समाम्नानाभावाच्छ्रीमधुसूदनाभिमतश्रुतिरसौ भिन्नैव भवितुमर्हति। वस्तुतस्त्वत्रोत्तरमन्त्रद्वय एव भीमं विनान्यानि सर्वाणि महिम्नःस्तोत्राष्टाविंशपद्योक्तभवादिनामान्युपलभ्यन्ते।

अथर्ववेदसंहितायाः पञ्चदशकाण्डस्य पञ्चमे सूक्तेऽपि—

"... [1]भवमिष्वासमनुष्ठातारमकुर्वन् ॥ १ ॥... [2]शर्वमिष्वास...॥४॥... [3]पशुपतिमिष्वास... ॥ ६ ॥ ... [4]उग्रं देवमिष्वास... ॥ ८ ॥ ... [5]रुद्रमिष्वास ... ॥ १० ॥ ... [6]महादेवमिष्वास ... ॥ १२ ॥ ... [7]ईशानमिष्वास ... ॥ १४ ॥"

इत्येवं भीमं विहायान्येषां सप्तानां नाम्नां स्पष्टोल्लेखः प्राप्यते। अत्र यद्यप्यग्निनामत्वमेषां न श्रूयतेऽतो मधुसूदनाचार्याभिप्रेतश्रुत्याऽतोऽपि भिन्नयैव भाव्यं तथापि महिम्नःस्तोत्रस्थाभिधानाष्टकमध्ये समानामभिधानानां वर्णनं शिवपरत्वं च महिम्नःस्तोत्रसाम्यबुद्धिं जनयति।

एवमेव "भवः शर्वो रुद्रः पशुपतिः" इतिमहिम्नःस्तोत्रस्थाभिधानाष्टकीयाद्यनामचतुष्टयक्रमोऽप्याथर्वणसंहितैकादशकाण्डषष्ठसूक्तस्थे

"भवाशर्वाविदं ब्रूमो रुद्रं पशुपतिश्च यः।
इषूर्या एषां संविद्म ता नः सन्तु सदा शिवाः ॥९॥"

इति नवममन्त्रे प्रकाशितं क्रममेवानुरुणद्धीति नातितिरोहितं स्यात्तद्विदुषाम्।

श्रीमधुसूदनाभिमता श्रुतिस्तु शतपथब्राह्मणषष्ठकाण्डप्रथमाध्यायतृतीयब्राह्मणान्तःपातिनी "तान्येतान्यष्टावग्निरूपाणि ... ॥ १८ ॥" इत्येतत्प्रकरणसम्बद्धैवेत्याभाति। श्रीसायणचार्यैरप्यथर्ववेदसंहिताभाष्ये मूर्त्यष्टकोत्पत्तौ षष्ठकाण्डीयशतपथप्रमाणमेवोपस्थापितमित्यस्माभिः प्रागेव प्रदर्शितम्। यत्तु पुनस्तैस्तत्रोक्तम्—"असद्वा इदमग्र आसीत् [ शत० ६। १। १। १ ]"—इत्यादिना मूर्त्यष्टकोत्पत्तिः प्रपञ्चितेति तन्नातिमनोरमं तस्याः प्रथमद्वितीययोर्ब्राह्मणयोरनुपलम्भात् तृतीय एव ब्राह्मणे प्रपञ्चितत्वाच्च। तदित्थम्—

"अभूद्वा इयं प्रतिष्ठेति। तद्भूमिरभवत्तामप्रथयत्सा पृथिव्यभवत्तस्यामस्यां प्रतिष्ठायां भूतानि च भूतानां च पतिः संवत्सरायादीक्षन्त भूतानां पतिर्गृहपतिरासीदुषाः पत्नी ॥ ७ ॥ तद्यानि तानि भूतानि। ऋतवस्तेऽथ यः स भूतानां पतिः संवत्सरः सोऽथ या सोषाः पत्न्यौषसी सा तानीमानि

भूतानि च भूतानां च पतिः संवत्सर उपसि रेतोऽसिञ्चन्त्स संवत्सरे कुमारोऽजायत सोऽरोदीत् ॥ ८ ॥

"तं प्रजापतिरब्रवीत् । कुमार किँ रोदिषि यच्छ्रमात्तपसोऽधिजातोऽसीति सोऽब्रवीदनपहतपाप्मा वा अस्म्यहितनामा नाम मे धेहीति तस्मात्पुत्रस्य जातस्य नाम कुर्यात् पाप्मानमेवास्य तदपहन्त्यपि द्वितीयमपि तृतीयमभिपूर्वमेवास्य तत्पाप्मानमपहन्ति ॥९॥

"तमब्रवीद् रुद्रोऽसीति । तद्यदस्य तन्नामाकरोदग्निस्तद्रूपमभवदग्निर्वै रुद्रो यदरोदीत् तस्माद् रुद्रः सोऽब्रवीज्ज्यायान् वा अतोऽस्मि धेह्येव मे नामेति ॥१०॥ तमब्रवीत्सर्वोऽसीति । तद्यदस्य तन्नामाकरोदापस्तद्रूपमभवन्नापो वै सर्वोऽद्भ्यो हीदँ सर्वं जायते सोऽब्र००० नामेति ॥११॥ तमब्रवीत् पशुपतिरसीति । तद्यदस्य तन्नामाकरोदोषधयस्तद्रूपमभवन्नोषधयो वै पशुपतिस्तस्माद् यदा पशव ओषधीर्लभन्तेऽथ पतीयन्ति सोऽब्र००० नामेति ॥१२॥ तमब्रवीदुग्रोऽसीति । तद्यदस्य तन्नामाकरोद् वायुस्तद्रूपमभवद् वायुर्वा उग्रस्तस्माद्यदा बलवद्वात्युग्रो वातीत्याहुः सोऽब्र००० नामेति ॥१३॥ तमब्रवीदशनिरसीति । तद्यदस्य तन्नामाकरोद् विद्युत् तद्रूपमभवद् विद्युद्वा अशनिस्तस्माद्यं विद्युद्धन्त्यशनिरवधीदित्याहुः सोऽब्र००० नामेति ॥१४॥ तमब्रवीद् भवोऽसीति । तद्यदस्य तन्नामाकरोत् पर्जन्यस्तद्रूपमभवत् पर्जन्यो वै भवः पर्जन्याद्धीदँ सर्वं भवति सोऽब्र००० नामेति ॥ १५ ॥ तमब्रवीन्महादेवोऽसीति । तद्यदस्य तन्नामाकरोच्चन्द्रमास्तद्रूपमभवत् प्रजापतिर्वै चन्द्रमाः प्रजापतिर्वै महादेवः सोऽब्रवी००० नामेति ॥ १६ ॥ तमब्रवीदीशानोऽसीति । तद्यदस्य तन्नामाकरोदादित्यस्तद्रूपमभवदादित्यो वा ईशान आदित्यो ह्यस्य सर्वस्येष्टे सोऽब्रवीदेतावान् वा अस्मि मा मेतः परो नाम धा इति ॥ १७ ॥

"तान्येतान्यष्टावग्निरूपाणि । कुमारो नवमः सैवाग्नेस्त्रिवृत्ता ॥१८॥ ०००॥१९॥००० यद्वाव रेतः सिक्तं तदेव जायते तत्ततो विक्रियमाणमेव वर्धमानँ शेते तस्मात्संवत्सर एव चिनुयात संवत्सरेऽनुब्रूयात तस्य

चितस्य नाम करोति पाप्मानमेवास्य तदपहन्ति चित्रनामानं करोति चित्रोऽसीति सर्वाणि हि चित्राण्यग्निः ॥ २० ॥" इति ।

अत्र चित्राभिधकुमाराग्ने रूपाणि रुद्र[१]-सर्व[२]-पशुपत्यु[३]ग्र[४]-अशनि[५]-भव[६]-महादेवे[७]-शान[८]नामानि यथाक्रममग्न्य[१]प्यो[२]षधि[३]-वायु[४]-विद्युत्[५]-पर्जन्य[६]-चन्द्रम[७]आदित्या[८]भिन्नान्युक्तानि ।

ऋग्वेदशाङ्खायन( कौषीतकि )-ब्राह्मणे षष्ठाध्याय एवं श्रूयते—

"हरिः ॐ प्रजापतिः प्रजातिकामस्तपोऽतप्यत तस्मात्तप्तात् पञ्चाजायन्ताग्निर्वायुरादित्यश्चन्द्रमा उषाः पञ्चमी तानब्रवीद् यूयमपि तप्यध्वमिति तेऽदीक्षन्त तान् दीक्षितांस्तेपानानुषाः प्राजापत्याप्सरोरूपं कृत्वा पुरस्तात् प्रत्युदैत् तस्यामेषां मनः समपतत् ते रेतोऽसिञ्चन्त ते प्रजापतिं पितरमेत्याब्रुवन् रेतो वा असिञ्चाम हा इदं नो मामुया भूदिति स प्रजापतिर्हिरण्मयं चमसमकरोदिषुमात्रमूर्ध्वमेवं तिर्यञ्चं तस्मिन्नेतत्समसिञ्चत्तत उदतिष्ठत् सहस्राक्षः सहस्रपात् सहस्रेण प्रतिहिताभिः ॥ १ ॥

"स प्रजापतिं पितरमभ्यायच्छत् तमब्रवीत् कथा माऽभ्यायच्छसीति नाम मे कुर्वित्यब्रवीन्न वा इदमविहितेन नाम्नाऽन्नमत्स्यामीति स वै त्वमित्यब्रवीद् भव एवेति यद् भव आपस्तेन ह वा एनं न भवो हिनस्ति नास्य प्रजां नास्य पशून्नास्य ब्रुवाणं चनाथ य एनं द्वेष्टि स एव पापीयान् भवति न स य एवं वेद तस्य व्रतमार्द्रमेव वासः परिदधीतेति ॥ २ ॥ तं द्वितीयमभ्यायच्छत् तमब्रवीत् कथा माऽभ्यायच्छसीति द्वितीयं मे नाम कुर्वित्यब्रवीन्न वा इदमेकेन नाम्नाऽन्नमत्स्यामीति स वै त्वमित्यब्रवीच्छर्व एवेति यच्छर्वोऽग्निस्तेन न ह वा एनं शर्वो हिनस्ति नास्य ०००००० तस्य व्रतं सर्वमेव नाश्नीयादिति ॥ ३ ॥ तं तृतीयमभ्यायच्छत् तमब्रवीत् कथा माऽभ्यायच्छसीति तृतीयं मे नाम कुर्वित्यब्रवीन्न वा इदं द्वाभ्यां नामभ्यामन्नमत्स्यामीति स वै त्वमित्यब्रवीत् पशुपतिरेवेति यत् पशुपतिर्वायुस्तेन न ह वा एनं पशुपतिर्हिनस्ति नास्य ००००० तस्य व्रतं ब्राह्मणमेव न परिवदेदिति ॥ ४ ॥ तं चतुर्थमभ्यायच्छत् तमब्रवीत्कथा माऽभ्यायच्छसीति चतुर्थं

मे नाम कुर्वित्यब्रवीन्न वा इदं त्रिभिर्नामभिरन्नमत्स्यामीति स वै त्वमित्य-ब्रवीदुग्र एव देव इति यदुग्रो देव ओषधयो वनस्पतयस्तेन न ह वा एनमुग्रो देवो हिनस्ति नास्य ००००० तस्य व्रतं स्त्रिया एव विवरं नेक्षे-तेति ॥ ५ ॥ तं पञ्चममभ्यायच्छत् तमब्रवीत् कथा माऽभ्यायच्छसीति पञ्चमं मे नाम कुर्वित्यब्रवीन्न वा इदं चतुर्भिर्नामभिरन्नमत्स्यामीति स वै त्वमित्य-ब्रवीन्महानेव देव इति यन्महान् देव आदित्यस्तेन न ह वा एनं महान् देवो हिनस्ति नास्य ००००० तस्य व्रतमुद्यन्तमेवैनं नेक्षेतास्तं यन्तं चेति ॥ ६ ॥ तं षष्ठमभ्यायच्छत् तमब्रवीत् कथा माऽभ्यायच्छसीति षष्ठं मे नाम कुर्वित्य-ब्रवीन्न वा इदं पञ्चभिर्नामभिरन्नमत्स्यामीति स वै त्वमित्यब्रवीद् रुद्र एवेति यद् रुद्रश्चन्द्रमास्तेन न ह वा एनं रुद्रो हिनस्ति नास्य ००००० तस्य व्रतं विमूर्तमेव नाश्नीयान्मज्जानं चेति ॥ ७ ॥ तं सप्तममभ्यायच्छत् तमब्रवीत् कथा माऽभ्यायच्छसीति सप्तमं मे नाम कुर्वित्यब्रवीन्न वा इदं षड्भिर्नामभिरन्न-मत्स्यामीति स वै त्वमित्यब्रवीदीशान एवेति यदीशानोऽन्नं तेन न ह वा एनमीशानो हिनस्ति नास्य ००००० तस्य व्रतमन्नमेवेच्छमानं न प्रत्याचक्षी-तेति ॥ ८ ॥ तमष्टममभ्यायच्छत् तमब्रवीत् कथा माऽभ्यायच्छसीत्यष्टमं मे नाम कुर्वित्यब्रवीन्न वा इदं सप्तभिर्नामभिरन्नमत्स्यामीति स वै त्वमित्यब्रवी-दशनिरेवेति यदशनिरिन्द्रस्तेन न ह वा एनमशनिर्हिनस्ति नास्य प्रजां नास्य पशून्नास्य ब्रुवाणं चनाथ य एनं द्वेष्टि स एव पापीयान् भवति न स य एवं वेद तस्य व्रतं सत्यमेव वदेद्धिरण्यं च बिभृयादिति स एषोऽष्टनामा-ऽष्टधा विहितो महान् देव आह वा अस्याष्टमात् पुरुषात् प्रजाऽन्नमत्ति वशीयान् वशीयान् हैवास्य प्रजायामाजायते य एवं वेद ॥ ९ ॥" इति ।

अत्र शतपथप्रदर्शितक्रमभेदेन भव[1]-शर्व[2]-पशुपत्युग्र[3]-महादेव[4]-रुद्रे[5]-शाना[6]शनि[7]-नागानोऽग्नि[1]-वाय्वो[2]षधिवनस्पत्या[3]दित्य[4]-चन्द्रमो[5]ऽन्नेन्द्राः[6][7][8] साक्षादष्टनाम्नोऽष्टधा विहितस्य महादेवस्यैव रूपतया निर्दिष्टाः ।

तदेवं प्रदर्शितवेदवचनेषु नामतः शुक्लयजुर्वेदीयमन्त्रद्वयेऽथर्ववेदीयैकादश-पञ्चदशकाण्डमन्त्रेषु शतपथशाङ्खायनब्राह्मणयोश्च मन्त्रेषु सर्वत्र भीमव्यतिरिक्ता-नामेव महिम्नःस्तोत्रोक्तभवादिनाम्नां साहचर्येणोल्लेखो दृश्यते ।

तत्राथर्ववेदीयवचनेषु तावत् किञ्चिदष्टमं नाम नामान्तरेणापि न गृहीतम् । अत एव महिम्नःस्तोत्रस्थषड्विंशाष्टाविंशपद्ययोरेकस्याप्यथर्वमूलकत्वपक्षो नामक्रमस्यांशिकसंवाददर्शनेऽपि प्ररोहकक्षामारोढुं न क्षमः ।

शुक्लयजुर्वेदीयमन्त्रद्वये भीमस्थानीयत्वेनेन्द्रस्य[12] ग्रहणं कृतमित्यनुमातुं यद्यपि शक्यते तथाप्यत्राष्टव्यतिरिक्तनामदर्शनान्महिम्नःस्तोत्रोक्ताभिधानाष्टकमूलमितोऽप्यन्यत्रैव मृग्यम् ।

एवं यद्यपि श्रीमधुसूदनाचार्याणामभिप्रायमनुसृत्य शतपथश्रुतिवचनान्यस्माभिर्वैशद्येनोद्धृतानि तथापि न तान्यपि महिम्नःस्तोत्रपद्यमूलत्वपदेऽभिषेक्तुं शक्यन्ते रुद्रादीनि नामानि तत्र कुमाराग्नेरेव साक्षान्न तु महिम्नःस्तोत्रानुसारेण शिवस्येति प्रधानहेतोः । वह्नेर्भगवद्विभूतित्वस्वीकारेण व्यवस्थितताद्यपि परम्परासम्बन्ध एव शरणं स्यात् ।

---

१२ ऋग्वेदमन्त्रेषु तावत्साक्षादिन्द्रस्य विशेषणत्वेन वा सम्बन्धान्तरेण वा भीमपदप्रयोगबाहुल्यमुपलभ्यते । यथा—"भीमस्तुविष्माञ्चर्षणिभ्य आतपः शिशीते वज्रं तेजसे न वंसगः ।" ( १।५५।१ ) । "अस्मै भीमाय नमसा समध्वर उषो न शुभ्र आ भरा पनीयसे ।" ( १।५७।३ ) । "ऋष्वा महाँ अनुष्वधं भीम आ वावृधे शवः ।" ( १।८१।४ ) । "स वज्रभृद् दस्युहा भीम उग्रः सहस्रचेताः शतनीथ ऋभ्वा ।" ( १।१००।१२ ) । "मृगो न हस्ती तविषीमुषाणः सिंहो न भीम आयुधानि बिभ्रत् ।" ( ४।१६।१४ ) । "गिरिर्न यः स्वतवाँ ऋष्व इन्द्रः सनादेव सहसे जात उग्रः । आदर्ता वज्रं स्थविरं न भीम उद्नेव कोशं वसुना न्यृष्टम् ॥" ( ४।२०।६ ) । "अग्निर्न शुष्कं वनमिन्द्र हेती रक्षो नि धक्ष्यशनिर्न भीमा ।" ( ६।१८।१० ) । "सत्यसत्वन्महते रणाय रथमातिष्ठ तुविनृम्ण भीमम् ।" ( ६।३१।५ ) । "यस्तिग्मशृङ्गो वृषभो न भीम एकः कृष्टीश्च्यावयति प्र विश्वाः ।" ( ७।१९।१ ) । "भीमो विवेषायुधेभिरेषामपांसि विश्वा नर्याणि विद्वान् । इन्द्रः पुरो जर्हृषाणो वि दूधोद्वि वज्रहस्तो महिना जघान ।" ( ७।२१।४ ) । "न हि त्वा शूर देवा न मर्तासो दित्सन्तम् । भीमं न गां वारयन्ते ॥" ( ८।८८।३ ) । "सूर्यश्चिदा हरितो अस्य रीरमदिन्द्रादा कश्चिद् भयते तवीयसः । भीमस्य वृष्णो जठरादभिश्वसो दिवे दिवे सहुरिः स्तन्नबाधितः ॥" ( १०।९२।८ ) । "आशुः शिशानो वृषभो न भीमो घनाघनः क्षोभणश्चर्षणीनाम् । संक्रन्दनोऽनिमिष एकवीरः शतं सेना अजयत्साकमिन्द्रः ॥" ( १०।१०३।१ ) । इति ।

अस्मन्मतेन तु शाङ्खायनब्राह्मणश्रुतिरेवोदाहृतसर्वश्रुतिषु प्रकृतविषयस्यानुकूलतमा महिम्नःस्तोत्राष्टाविंशपद्यस्थश्रुतिशब्दार्थतया ग्राह्या च पारिशेष्यात्सदृशतमत्वात् "स एषोऽष्टनामाऽष्टधा विहितो महान् देवः" इति वाक्यशेषेऽष्टनामत्वेन महादेवस्यैव परामर्शाच्च । किञ्चात्रत्यो "महान् देवः" इति पदप्रयोग एव "सहमहान्" इति पदेन महिम्नःस्तोत्रेऽनूदितः । अन्यच्च "शर्वः" इति शाङ्खायनब्राह्मणपाठोऽपि शतपथधृतस्य "सर्वः" इति पाठस्य महिम्नःस्तोत्राद् दवीयस्त्वं स्वस्य च तदपेक्षया नेदीयस्त्वमवगमयति । एवमेव नामक्रमस्यान्यत्र सामान्यतया प्रबलयुक्तित्वाङ्गीकरणायोग्यत्वेऽप्यत्र हेत्वन्तरयोगे विशेषभावमापन्नो महिम्नःस्तोत्रस्य भवादिनामक्रमोऽपि यथा शाङ्खायनब्राह्मणश्रुत्यानुगुण्यं पोषयति न तथा शतपथानुगुण्यम् । वेदवाक्यान्तरेष्वपि भवशर्वौ प्रायशः साहचर्येण नामान्तरापेक्षया चादावेवागच्छतो न तु तथा शतपथे । यद्यपि यथा शतपथे तथा शाङ्खायनेऽपि महिम्नःस्तोत्रस्थभीमशब्दस्य स्थानेऽशनिशब्दस्य ग्रहणं कृतं तथापि तेन सह शतपथे प्रयुक्ताद् विद्युच्छब्दाच्छाङ्खायने प्रयुक्त इन्द्रशब्दो भीमशब्दस्य समीपतरः प्रदर्शितप्रकारेणानेकमन्त्रेषु भीमेन्द्रशब्दयोर्विशेषणविशेष्यभावसम्बन्धोपलब्धेः ।

---

देवान्तरसम्बन्धेन भीमशब्दप्रयोगस्यापेक्षाकृतन्यूनत्वमेव दृश्यते दाशतय्याम् । यथा—अग्निसम्बन्धेन ( १।३६।२० ) ( १।६५।७ ) ( १।७०।६ ) ( १।१४०।६ ) ( ६।३।३ ) ( ६।६।५ )। मरुत्सम्बन्धेन ( २।३४।१ ) ( ५।५६।२ ) ( ५।५६।३ ) ( ७।५८।२ ) सोमसम्बन्धेन ( ९।६१।३ ) ( ९।७०।७ ) ( ९।९७।२८ ) । बृहस्पतिसम्बन्धेन ब्रह्मणस्पतिसम्बन्धेन च ( १।१९०।३ ) ( २।२३।३ ) ( १०।१०९।४ ) । दधिक्रासम्बन्धेन ( ४।३८।८ )। विष्णुसम्बन्धेन ( १।१५४।२ ) रुद्रसम्बन्धेन च ( २।३३।११ )। इति । एवमथर्ववेदसंहितायामपि भीमशब्दप्रयोग इन्द्रसम्बन्धेन ( ४।३७।८ ) ( ४।३७।९ ) ( ७।८४।३ ) ( १३।१३।२ ) ( २०।१५।२ ) ( २०।३७।१ )। रुद्रादिसम्बन्धेन च ( ११।२।१८ ) ( १८।१।४० ) इत्यादौ ।

एवमेव शुक्लयजुर्वेदे इन्द्रसम्बन्धेन ( १७।८६ ) ( १८।७१ ) ( २१।३९ ) इत्यादौ । रुद्रादिसम्बन्धेन च ( १६।२८ ) ( १६।५० ) ( १६।५१ ) इत्यादौ ।

इत्थं सर्वत्रैन्द्रसम्बन्धेनैव भीमशब्दस्य प्रयोगबाहुल्यादृग्वेदसंहितायां ( ९।१८।१० )

महिम्नःस्तोत्रपड्विंशपद्यस्थात्मशब्दस्य मूलमपि यथा शाङ्खायनब्राह्मणस्य इन्द्र-शब्दो न तथा शतपथोक्तो विद्युन्छब्दो भवितुमर्हति "तस्मादिदन्द्रो नामेदन्द्रो ह वै नाम तमिदन्द्रं सन्तमिन्द्र इत्याचक्षते परोक्षेण परोक्षप्रिया इव हि देवाः ।" (२।४।१४) इत्यैतरेयारण्यक आत्मन एवेन्द्रशब्दवाच्यत्वान् अयमिन्द्रपदवाच्य आत्मैवान्यत्र "होता" "सोमयाजी" "मखेशः" "क्षेत्रज्ञः" इत्यादिपदैः परामृष्टः । शाङ्खायनब्राह्मणोक्ता ओषधयो वनस्पतयश्च व्योम-शब्देनान्नं च धरणिशब्देनात्र स्तोत्रेऽभिहितानीत्यपि विद्वद्भिरनुसन्धेयम् ।

इत्थमस्माभिर्महिम्नःस्तोत्रस्थपड्विंशाष्टाविंशपद्ययोर्वेदमूलकत्वं वैशद्येन प्रत्यपादि ।

---

एवमेव—

त्रयीं तिस्रो वृत्तीस्त्रिभुवनमथो त्रीनपि सुरा-
नकाराद्यैर्वर्णैस्त्रिभिरभिदधत् तीर्णविकृति ।
तुरीयं ते धाम ध्वनिभिरवरुन्धानमणुभिः
समस्तं व्यस्तं त्वां शरणद गृणात्योमिति पदम् ॥ २७ ॥

इत्येतस्य महिम्नःस्तोत्रस्थसप्तविंशपद्यस्य किं श्रौतं मूलमिति जिज्ञासायां श्रीमधुसूदनसरस्वतीकृतस्य "त्रयीं वेदत्रयम् । तिस्रो वृत्तयो जाग्रत्स्वप्नसुपुप्त्या-ख्या अन्तःकरणस्यावस्थाः । ००० । त्रिभुवनं भूर्भुवः स्वः । त्रयः सुराः ब्रह्मविष्णु-महेश्वराः । ००० । ००० । एवमत्र प्रकारः, ऋग्वेदो जाग्रदवस्था भूर्लोको ब्रह्मा चेति चतुष्टयमकारार्थः । तथा यजुर्वेद स्वप्नावस्था भुवर्लोको विष्णुश्चेति चतु-ष्टयमुकारार्थः । तथा सामवेदः सुपुप्त्यवस्था स्वर्लोको महेश्वरश्चेति चतुष्टयं मकारार्थः । इदं माण्डूक्यनृसिंहतापनीयाथर्वशिखादावन्यदप्युक्तं गुरूपदेशा-ज्ज्ञातव्यम् । अतिरहस्यत्वान्नेह सविशेषमुच्यते ।" इत्यादिव्याख्यानस्यानु-सारेण माण्डूक्याद्युपनिषद्भ्य एवायमर्थो गृहीत इति प्रतीतिः स्यात् । किन्तु नैतन्मतं समीचीनं भात्यघोनिर्दिष्टकारणकलापसद्भावे ।

---

स्वशब्दौपम्यस्यापि दृष्टत्वाच्च यदृग्वेदीयशाङ्खायनब्राह्मणे भौमस्थानीयग्वेनाग्नीन्द्रनामप्रयोगो दृश्यते तदुचितमेवेति विस्तराद्विरम्यतेऽस्माभिः ।

माण्डूक्योपनिषदि तावत् सप्तमद्वादशमन्त्रयोर्य ओङ्कारवाच्यश्चतुर्थोऽव्यवहार्यः प्रपञ्चोपशमः शिवोऽद्वैत आत्मेत्युक्तो महिम्नःस्तोत्रे तु तस्यैव तीर्णविकृतितुरीयशिवधामरूपत्वेन समस्तोम्पदवाच्यत्वं स्वीकृतमित्युत्तरार्धपद्यार्थस्योपनिषत्संवादितायाः स्पष्टत्वेऽपि त्रयी-त्रिभुवन-सुरत्रय-पदार्थानामेतस्यामुपनिषद्यनुपलब्धेर्न माण्डूक्योपनिषन्मूलत्वं समस्ति पूर्वार्धपद्यार्थस्य। वृत्तिपदस्य श्रीमधुसूदनकृतं व्याख्यानं तु "स्वप्नवृत्तावपि०" इति "जाग्रद्वृत्तावपि०" इति चैतयोर्गौडपादीयवैतथ्यप्रकरणस्थनवमदशमकारिकयोस्तदर्थीयवृत्तिशब्दप्रयोगदर्शनेन माण्डूक्यागमप्रमाणितमित्यभ्युपेतुं शक्यते।

माण्डूक्योपनिषदाद्यमन्त्रसप्तकविषयावलम्बित्वादेव नृसिंहपूर्वतापनीयचतुर्थोपनिषद्द्वितीयखण्डस्य नृसिंहोत्तरतापनीयप्रथमद्वितीयखण्डयोश्च, नैतन्मूलतापि प्रकृतपद्यपूर्वार्धार्थस्य सम्भवति।

नृसिंहपूर्वतापनीयद्वितीयोपनिषत्प्रथमखण्डे नृसिंहोत्तरतापनीयतृतीयखण्डे च यदपूर्वं [१२]व्याख्यानं प्रणवस्योपलभ्यते तत्र 'तिस्रो वृत्तीः' इतिपदवाच्यानां जाग्रदाद्यवस्थानां न कश्चित्सङ्केतोऽपि दृश्यते। अपि च तत्र ब्रह्मा विष्णू रुद्रश्च न केवलाः किन्तु वसवो रुद्रा आदित्या अपि यथाक्रमं तेषां सहचरत्वेन तत्संयुक्ता उपलभ्यन्ते। अत एव विशिष्टरूपत्वान्नैते प्रकृतपद्योक्तास्त्रयः सुराः। गायत्र्यादिच्छन्दसां गार्हपत्याद्यग्नीनां च प्रस्तावस्तत्र महिम्नःस्तोत्रव्यतिरिक्तविषयः। किञ्च तत्रार्धमात्रारूपसमस्तोङ्कारस्योपव्याख्यानं न प्रपञ्चातीतशिवधाम्नो निदर्शकमपि तु सोमलोकाथर्ववेदसंवर्तकाग्निमरुद्विराडेकर्षिभास्वतीरूपतया चतुर्थवेदचतुर्थलोकचतुर्थदेवप्रदर्शकतया च प्रकृतपद्यार्थस्य सर्वथैव विरुद्धम्।

अतो न नृसिंहतापनीयोपनिषन्मूलकत्वं प्रकृतपद्यपूर्वार्धपदार्थानाम्।

---

१२ तस्य ह वै प्रणवस्य या पूर्वा मात्रा पृथिव्यकारः स ऋग्भिरृग्वेदो ब्रह्मा वसवो गायत्री गार्हपत्यः सा साम्नः प्रथमः पादो भवति। द्वितीयान्तरिक्षं स उकारः स यजुर्भिर्यजुर्वेदो विष्णुरुद्रास्त्रिष्टुब्दक्षिणाग्निः सा साम्नो द्वितीयः पादो भवति। तृतीया द्यौः स मकारः स सामभिः सामवेदो रुद्रादित्या जगत्याहवनीयः सा साम्नस्तृतीयः पादो भवति। यावसानेऽस्य चतुर्थ्यर्धमात्रा सा सोमलोक ओङ्कारः सोऽथर्वणैर्मन्त्रैरथर्ववेदः संवर्तकोऽग्निर्मरुतो विराडेकर्षिर्भास्वती स्मृता सा साम्नश्चतुर्थः पादो भवति ॥ १ ॥

एतेनैषामथर्वशिखोपनिषन्मूलत्वमपि प्रत्युक्तं भवति ।

अस्मन्मतेन तु स्तोत्रकृदभिप्रायः प्रस्तुतप्रबन्धान्तभागे वक्ष्यमाणरीत्यापि व्याख्यातुं शक्यते । एवं चैतत्पद्योत्तरार्धप्रतिपादितस्यार्थस्य श्रीमधुसूदनाभिमतप्रकारेणैव माण्डूक्याद्युपनिषन्मूलतायाः स्वीकर्तव्यत्वेऽपि प्रकृतपद्यपूर्वार्धप्रतिपादितपदार्थानां श्रौतं मूलं त्वन्यत्रैव मृग्यम् ।

तत्र तावच्छान्दोग्योपनिषदो द्वितीयाध्यायत्रयोविंशखण्डे शाङ्खायनब्राह्मणस्य षष्ठाध्यायदशमखण्डे शतपथब्राह्मणस्यैकादशकाण्डस्थे पञ्चमाध्यायाष्टमब्राह्मणे [ चतुर्थप्रपाठकद्वितीयब्राह्मणे ] ऐतरेयब्राह्मणस्य पञ्चमपञ्चिकाया द्वात्रिंशे खण्डे च प्रकृतपदार्थेषु केचित्केचिदुपलभ्यन्ते । एतच्चाधस्तनोद्धरणपर्यालोचनेनानुपदमेव स्फुटीभविष्यति—

"प्रजापतिर्लोकानभ्यतपत् तेभ्योऽभितप्तेभ्यस्त्रयी विद्या सम्प्रास्रवत् तामभ्यतपत् तस्या अभितप्ताया एतान्यक्षराणि सम्प्रास्रवन्त भूर्भुवःस्वरिति ॥ २ ॥ तान्यभ्यतपत् तेभ्योऽभितप्तेभ्य ओङ्कारः सम्प्रास्रवत् तद्यथा शङ्कुना सर्वाणि पर्णानि सन्तृण्णान्येवमोङ्कारेण सर्वा वाक् सन्तृण्णोङ्कार एवेदँ सर्वमोङ्कार एवेदँ सर्वम् ॥ ३ ॥" इति— ( छा०२।२३ )

"प्रजापतिस्तपोऽतप्यत स तपस्तप्त्वा प्राणादेवेमं लोकं प्रावृहदपानादन्तरिक्षलोकं व्यानादमुं लोकं स एतांस्त्रीँल्लोकानभ्यतप्यत सोऽग्निमेवास्माल्लोकादसृजत वायुमन्तरिक्षलोकादादित्यं दिवः स एतानि त्रीणि ज्योतींष्यभ्यतप्यत सोऽग्नेरेवर्चोऽसृजत [१४]वायोर्यजूंष्यादित्यात्सामानि स एतां त्रयीं विद्यामभ्यतप्यत स यज्ञमतनुत ०००० स भूरित्यृचां प्रावृहद्भुव इति यजुषां स्वरिति साम्नाम् ०००" इत्यादि—( शाङ्खा० ब्रा० ६ । १० )

---

१४ एवमिहान्यत्र च सर्वत्र त्रयोऽप्येतेऽग्निवाय्वादित्याः पृथिव्यन्तरिक्षद्युलोकस्थाना ज्योतिरपरपर्याया देवा एवोक्ता न तु क्वचिदप्यृषयः । अत एवैवआर्तीयवेदवचनाश्रयेण 'सृष्ट्यादौ चत्वारो वेदा अग्निवाय्वादित्याङ्गिरोनाम्नां चतुर्णामृषीणां हृदयेऽऽविर्भूताः' इत्याधुनिकार्यसमाजप्रचारितं मतं न समीचीनम् । "तिस्र एव देवता इति नैरुक्ताः । अग्निः पृथिवीस्थानो वायुर्वेन्द्रो वान्तरिक्षस्थानः सूर्यो द्युस्थानः ।" इति "स न मन्येतायमेवाग्निरिति । अप्येते उत्तरे ज्योतिषी अग्नी उच्येते । ततो नु मध्यमः । 'समुद्रादूर्मिर्मधुमाँ उदारत्'

"प्रजापतिर्वा इदमग्र आसीत् । एक एव सोऽकामयत स्यां प्रजायेयेति सोऽश्राम्यत्स तपोऽतप्यत तस्माच्छ्रान्तात् तेपानात् त्रयो लोका असृज्यन्त पृथिव्यन्तरिक्षं द्यौः ॥ १ ॥ स इमाँल्लोकानभितताप । तेभ्यस्तप्तेभ्यस्त्रीणि ज्योतीँष्यजायन्ताग्निर्योऽयं पवते सूर्यः ॥ २ ॥ स इमानि त्रीणि ज्योतीँष्यभितताप । तेभ्यस्तप्तेभ्यस्त्रयो वेदा अजायन्ताग्नेर्ऋग्वेदो [१४]वायोर्यजुर्वेदः सूर्यात्सामवेदः ॥ ३ ॥ स इमांस्त्रीन्वेदानभितताप । तेभ्यस्तप्तेभ्यस्त्रीणि शुक्राण्यजायन्त भूरित्यृग्वेदाद् भुव इति यजुर्वेदात् स्वरिति सामवेदात् तदृग्वेदेनैव होत्रमकुर्वत यजुर्वेदेनाध्वर्यवँ सामवेदेनोद्गीथं यदेव त्रय्यै विद्यायै शुक्रं तेन ब्रह्मत्वमथोच्चक्राम ॥ ४ ॥" इति—( शत० ब्रा० ११।४।२ [ ५ । ८ ])

"प्रजापतिरकामयत । प्रजायेय भूयान्स्यामिति । स तपोऽतप्यत स तपस्तप्त्वेमाँल्लोकानसृजत पृथिवीमन्तरिक्षं दिवम् । ताँल्लोकानभ्यतपत् तेभ्योऽभितप्तेभ्यस्त्रीणि ज्योतींष्यजायन्ताग्निरेव पृथिव्या अजायत वायुरन्तरिक्षादादित्यो दिवः । तानि ज्योतींष्यभ्यतपत् तेभ्योऽभितप्तेभ्यस्त्रयो वेदा अजायन्त [१४]ऋग्वेद एवाग्नेरजायत यजुर्वेदो वायोः सामवेद आदित्यात् । तान् वेदानभ्यतपत् तेभ्योऽभितप्तेभ्यस्त्रीणि शुक्राण्यजायन्त भूरित्यृग्वेदादजायत भुव इति यजुर्वेदात् स्वरिति सामवेदात् । तानि शुक्राण्यभ्यतपत् तेभ्योऽभितप्तेभ्यस्त्रयो वर्णा अजायन्ताकार उकारो मकार इति । तानेकधा समभरत् तदेतदो३मिति । तस्मादोमिति प्रणौत्योमिति वै स्वर्गो लोक ओमित्यसौ योऽसौ तपति । स प्रजापतिर्यज्ञमतनुत तमाहरत् तेनायजत स ऋचैव

---

इत्यादिष्वमुक्तं मन्यन्ते ।......यस्तु सूक्तं भजते यस्मै हविर्निरुप्यतेऽयमेव सोऽग्निः । निपातमेवैते उत्तरे ज्योतिषी एतेन नामधेयेन भजेते ।" इति च निरुक्तसमाम्नाययोरुक्ती अप्यत्र सङ्गच्छेते । अपि च "अग्निमीळे पुरोहितं यज्ञस्य देवम्" इति पुरःस्थापितभौमाग्निमधिकृत्य कृतस्यर्ग्वेदप्रारम्भस्य "इषे त्वोर्जे त्वा वायवः स्थ" इति मध्यमस्थानाग्नि( ज्योती )रूपवायोर्नामग्राहं विहितस्य यजुर्वेदप्रारम्भस्य "अग्न आयाहि वीतये" इति द्युस्थानाग्निरूपादित्याह्वानपूर्वकस्य सामवेदप्रारम्भस्य चेदमेव रहस्यम् । सर्वमेतन्मनसिकृत्य मनुनाप्युक्तम् — "अग्निवायुरविभ्यस्तु त्रयं ब्रह्म सनातनम् । दुदोह यज्ञसिद्ध्यर्थमृग्यजुःसामलक्षणम् ॥" इति । ज्योतिःशब्दस्तु त्रयाणामपि साधारण इत्यलं बहुपल्लवितेन विदुषामग्रे ।

हौत्रमकरोद्यजुषाध्वर्यवं साम्नोद्गीथं यदेतत् त्रय्यै विद्यायै शुक्रं तेन ब्रह्मत्वमकरोत् ०००००" इत्यादि—( ऐत० ब्रा० ५ । ३२ )

तदेवमत्र महिम्नःस्तोत्रपद्ये व्यस्तस्योमिति पदस्याकारादिभिस्त्रिभिर्वर्णैर्ये त्रय्यादिपदार्था उच्यन्ते ते तु साकल्येनैतरेयब्राह्मण एवोक्ता माह्या येभ्यो यथाक्रममभितप्तेभ्योऽन्तेऽकारोकारमकारेति वर्णत्रयं तत्सम्मेलनरूप ओङ्कारश्च सर्वदाररूपत्वेनाजायेताम्। एवञ्चाकारादिवर्णोत्पत्तिपूर्वभाविन्यः शुक्रापरपर्याया भूर्भुवःस्वरिति तिस्रो महाव्याहृतय एव महिम्नःस्तोत्रोक्तास्तिस्रो वृत्तयः। तत्पूर्वभाविन ऋग्वेदयजुर्वेदसामवेदा एव त्रयीशब्दार्थः। तत्पूर्वभावीन्यग्निवाय्वादित्याख्यानि त्रीणि ज्योतींष्येव देवापरपर्यायास्त्रयः सुराः। तत्पूर्वभाविनश्च पृथिव्यन्तरिक्षद्युलोका एव त्रिभुवनम्। इत्येतत्सर्वमकारोकारमकारेषु व्यस्तरूपस्योङ्कारस्यैवार्थः। सर्वेषां मूलं प्रजापतिस्तु "अनिरुक्तो वै प्रजापतिः" ( शत० १४। २।३[३।२]। १५ ) इत्यादिश्रुत्यनुसारेण तीर्णविकृतितुरीयशिवधामरूपः समस्तोम्पदार्थः। इति महिम्नःस्तोत्रसप्तविंशपद्याभिप्रायः स्तोत्रकृदभिमतत्वेन स्वीकर्तुं शक्यते। व्युत्क्रमश्च पदार्थानां नेयश्छन्दोऽनुरोधतः।

छान्दोग्यादौ न तथा वैशद्यमेतेषां पदार्थानां यथैतरेयब्राह्मणेऽत एव विशेषतस्तु "अकारादिवर्ण"-शब्दसंवादाद्, एकधा तत्सम्भरणरूप-समस्तोम्पदस्य स्वर्गलोकरूप-शिवधामाभिधायकत्वाच्च, प्राधान्यादैतरेयमूलत्वमेवास्य पद्यस्य सिध्यति।

तदेवमस्माभिः सप्तविंशपद्यस्य वेदमूलता साधिता।



एवं गवेषितानां महिम्नःस्तोत्रस्थद्वाविंशषड्विंशसप्तविंशाष्टाविंशपद्यमूलभूतवेदवचसामैतरेयब्राह्मणे वा शाङ्खायनब्राह्मणे वैतरेयारण्यके [ ऐतरेयोपनिषदि ] वोपलब्धेः, इह प्राधान्येनैतेषां ग्रन्थानामुपयोगः स्तोत्रकृता कृत इति, एषां च सर्वेषामृग्वेदान्तर्भूतत्वेनर्ग्वेदे पक्षपातविशेषप्रदर्शनान्महिम्नःस्तोत्ररचयितर्ग्वेदीय इति च, वयमनुमिमीमह इति शिवम्।

पण्डितरघुवरशास्त्री श्रीवास्तव्याभिधे कुले जातः ।
वेदान्त-काव्य-तीर्थं साहित्याचार्यविरुद्धरः ॥ १ ॥
श्रीगिरिधारितनूजो योऽध्यापकः प्रयागसुनगरस्थे ।
विद्यालये वरिष्ठे गुरुदेवाङ्घ्रिप्रसादेन ॥ २ ॥
वियद्ग्रहाङ्कमृगाङ्केऽब्दे पौषे कृष्णदलदशम्यां सः ।
वारे कुजे शिवपरप्रबन्धपूर्तिं व्यधात्सम्यक् ॥ ३ ॥

नमः शशिकलाकोटि-कल्प्यमानाङ्कुरश्रिये ।
प्रपन्नजनसङ्कल्प-कल्पवृक्षाय शम्भवे ॥

